**स्वरांकित पाणिनीयधातुपाठः ।।**

।।अथ पाणिनीयधातुपाठः।।

अथ भ्वादयः ।

१. १ भू सत्तायाम् । उदात्तः परस्मैभाषः ।।

अथ तवर्गीयान्ताः ।

१. २ एध वृद्धौ ।
१. ३ स्पर्ध सङ्घर्षे ।
१. ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च ।
१. ५ बाधृ लोडने विलोडने ।
१. ६ नाधृऽ
१. ७ नाथृ याच्ञोपतापैश्वर्याशीष्षु ।
१. ८ दध धारणे ।
१. ९ स्कुदि आप्रवणे ।
१. १० श्विदि श्वैत्ये ।
१. ११ वदि अभिवादनस्तुत्योः ।
१. १२ भदि कल्याणे सुखे च ।
१. १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ।

१. १४ स्पदि किञ्चिच्चलने ।

१. १५ क्लिदि परिदेवने ।

१. १६ मुद हर्षे ।

१. १७ दद दाने ।

१. १८ ष्वदऽ

१. १९ स्वर्द आस्वादने ।

१. २० उर्द माने क्रीडायां च ।

१. २१ कुर्दऽ

१. २२ खुर्दऽ

१. २३ गुर्दऽ गुडक्रीडायामेव ।

१. २४ गुद क्रीडायामेव ।

१. २५ षूद क्षरणे ।

१. २६ ह्राद अव्यक्ते शब्दे ।

१. २७ ह्लादी सुखे च ।

१. २८ स्वाद आस्वादने ।

१. २९ पर्द कुत्सिते शब्दे ।

१. ३० यती प्रयत्ने ।

१. ३१ युतृऽ

१. ३२ जुतृ भासणे ।

१. ३३ विथृऽ

१. ३४ वेथृ याचने ।

१. ३५ श्रथि शैथिल्ये ।

१. ३६ ग्रथि कौटिल्ये ।

१. ३७ कत्थ श्लाघायाम् । इत्येधादय उदात्ता अनुदात्तेतः ।।

१. ३८ अत सातत्यगमने ।

१. ३९ चिती सञ्ज्ञाने ।

१. ४० च्युतिर् आसेचने ।

१. ४१ श्चुतिर् इत्येके ।

१. ४२ श्च्युतिर् क्षरणे ।

१. ४३ ज्युतिर् भासने ।

१. ४४ मन्थ विलोडने ।

१. ४५ कुथिऽ

१. ४६ पुथिऽ

१. ४७ लुथिऽ

१. ४८ मथि हिंसासङ्क्लेशनयोः ।

१. ४९ षिध गत्याम् ।

१. ५० षिधू शास्त्रे माङ्गल्ये च ।

१. ५१ खादृ भक्षणे ।

१. ५२ खद स्थैर्ये हिंसायां च ।

१. ५३ बद स्थैर्ये ।

१. ५४ गद व्यक्तायां वाचि ।

१. ५५ रद विलेखने ।

१. ५६ णद अव्यक्ते शब्दे ।

१. ५७ अर्द गतौ याचने च ।

१. ५८ नर्दऽ

१. ५९ गर्द शब्दे ।

१. ६० तर्द हिंसायाम् ।

१. ६१ कर्द कुत्सिते शब्दे ।

१. ६२ खर्द दन्दशूके ।

१. ६३ अतिऽ

१. ६४ अदि बन्धने ।

१. ६५ इदि परमैश्वर्ये ।

१. ६६ बिदि अवयवे ।

१. ६७ भिदि इत्येके ।

१. ६८ गडि वदनैकदेशे ।

१. ६९ णिदि कुत्सायाम् ।

१. ७० टुनदि समृद्धौ ।

१. ७१ चदि आह्लादे दीप्तौ च ।

१. ७२ त्रदि चेष्टायाम् ।

१. ७३ कदिऽ

१. ७४ क्रदिऽ

१. ७५ क्लदि आःवाने रोदने च ।

१. ७६ क्लिदि परिदेवने ।

१. ७७ शुन्ध शुद्धौ । इत्यतादय उदात्ता उदात्तेतः ॥

अथ कवर्गीयान्ताः ।

१. ७८ शीकृ सेचने ।

१. ७९ \sIkR^इ इत्येके ।

\१. ८० लोकृ दर्शने ।

१. ८१ श्लोकृ सङ्घाते ।

१. ८२ स्रोकृ इति पाठान्तरम् ।

१. ८३ द्रेकृS

१. ८४ ध्रेकृ शब्दोत्सा:अयोः ।

१. ८५ रेकृ शङ्कायाम् ।

१. ८६ सेकृS

१. ८७ स्रेकृS

१. ८८ स्रकिS

१. ८९ श्रकिS

१. ९० श्लकि गतौ गत्यर्थाः ।

१. ९१ शकि शङ्कायाम् ।

१. ९२ अकि लक्षणे ।

१. ९३ वकि कौटिल्ये ।

१. ९४ मकि मण्डने ।

१. ९५ कक लौल्ये ।

१. ९६ कुकऽ

१. ९७ वृक आदाने ।

१. ९८ चक तृप्तौ प्रतिघाते च ।

१. ९९ ककिऽ

१. १०० वकिऽ

१. १०१ श्वकिऽ

१. १०२ त्रकिऽ

१. १०३ ढौकृऽ

१. १०४ त्रौकृऽ

१. १०५ ष्वस्कऽ ष्वष्कऽ

१. १०६ वस्कऽ वष्कऽ

१. १०७ मस्कऽ मष्क

१. १०८ टिकृऽ

१. १०९ टीकृऽ

१. ११० तिकृऽ

१. १११ तीकृऽ

१. ११२ रघिऽ

१. ११३ लघि गत्यर्थाः ।

१. ११४ ष्वकि इत्येके तृतीयो दन्त्यादिरित्येके । लघि भोजननिवृत्तावपि ।

१. ११५ अघिऽ

१. ११६ वघिऽ

१. ११७ मघि गत्याक्षेपे । गतौ गत्यारम्भे चेत्यपरे । मघि कैतवे च ।

१. ११८ राघृऽ

१. ११९ लाघृऽ

१. १२० द्राघृ सामर्थ्ये ।

१. १२१ ध्राघृ इत्यपि केचित् । द्राघृ आयामे च ।

१. १२२ श्लाघृ कत्थने । इति शीकादय उदात्ता अनुदात्तेतः ।।

१. १२३ फक्क निचैर्गतौ ।

१. १२४ तक हसने ।

१. १२५ तकि कृच्छ्रजीवने ।

१. १२६ बुक्क भषणे ।

१. १२७ शुक गतौ ।

१. १२८ कख हसने ।

१. १२९ ओखृऽ

१. १३० राखृऽ

१. १३१ लाखृऽ

१. १३२ द्राखृऽ

१. १३३ ध्राखृ शोषणालमर्थ्योः ।

१. १३४ शाखृऽ

१. १३५ श्लाखृ व्याप्तौ ।

१. १३६ उखऽ

१. १३७ उखिऽ

१. १३८ वखऽ

१. १३९ वखिऽ

१. १४० मखऽ

१. १४१ मखिऽ

१. १४२ णखऽ

१. १४३ णखिऽ

१. १४४ रखऽ

१. १४५ रखिऽ

१. १४६ लखऽ

१. १४७ लखिऽ

१. १४८ इखऽ

१. १४९ इखिऽ

१. १५० ईखऽ

१. १५१ ईखिऽ

१. १५२ वल्गऽ

१. १५३ रगिऽ

१. १५४ लगिऽ

१. १५५ अगिऽ

१. १५६ वगिऽ

१. १५७ मगिऽ

१. १५८ तगिऽ

१. १५९ त्वगिऽ

१. १६० त्रगिऽ

१. १६१ श्रगिऽ श्वगिऽ ष्वगिऽ

१. १६२ श्लगिऽ

१. १६३ इगिऽ

१. १६४ रिगिऽ

१. १६५ लिगि गत्यर्थाः ।

१. १६६ मुखिऽ

१. १६७ थकिऽ

१. १६८ रिखऽ

१. १६९ रिखिऽ

१. १७० लिखऽ

१. १७१ लिखिऽ

१. १७२ त्रखऽ

१. १७३ त्रिखिऽ

१. १७४ शिखि इत्यपि केचित् । त्वगि कम्पने च ।

१. १७५ युगिऽ

१. १७६ जुगिऽ

१. १७७ बुगि वर्जने ।

१. १७८ \vugi इत्येके ।

\१. १७९ घघ हसने ।

१. १८० \ghaggha इत्येके ।

\१. १८१ दघि पालने ।

१. १८२ लघि शोषणे भाषायां दीप्तौ सीमातिक्रमे च ।

१. १८३ मघि मण्डने ।

१. १८४ शिघि आघ्राणे ।

१. १८५ अर्घ मूल्ये । इति फक्कादय उदात्ता उदात्तेतः ।।

अथ चवर्गीयान्ताः ।

१. १८६ वर्च दीप्तौ ।

१. १८७ षच सेचने सेवने च ।

१. १८८ लोचृ दर्शने ।

१. १८९ शच व्यक्तायां वाचि ।

१. १९० श्वचऽ

१. १९१ श्वचि गतौ ।

१. १९२ कच बन्धने ।

१. १९३ कचिऽ

१. १९४ काचि दीप्तिबन्धनयोः ।

१. १९५ मचऽ

१. १९६ मुचि कल्कने । कथन इत्यन्ये ।

१. १९७ मचि धारणोच्छ्रायपूजनेषु ।

१. १९८ पचि व्यक्तीकरणे ।

१. १९९ ष्टुच प्रसादे ।

१. २०० ऋज गतिस्थानार्जनोपार्जनेषु ।

१. २०१ ऋजिऽ

१. २०२ भृजी भर्जने ।

१. २०३ एजृऽ

१. २०४ भ्रेजृऽ

१. २०५ भ्राजृ दीप्तौ ।

१. २०६ रेजृ दीप्तौ ।

१. २०७ ईज गतिकुत्सनयोः ।

१. २०८ \Iji इत्येके ।

\१. २०९ वीज गतौ । इति वर्चादय उदात्ता अनुदात्तेतः ॥

१. २१० शुच शोके ।

१. २११ कुच शब्दे तारे ।

१. २१२ कुञ्चऽ

१. २१३ क्रुञ्च कौटिल्याल्पीभावयोः ।

१. २१४ लुञ्च अपनयने ।

१. २१५ अञ्चु गतिपूजनयोः ।
१. २१६ वञ्चुऽ
१. २१७ चञ्चुऽ
१. २१८ तञ्चुऽ
१. २१९ त्वञ्चुऽ
१. २२० म्रुञ्चुऽ
१. २२१ म्लुञ्चुऽ
१. २२२ म्रुचुऽ
१. २२३ म्लुचु गत्यर्थाः ।
१. २२४ ग्रुचुऽ
१. २२५ ग्लुचुऽ
१. २२६ कुजुऽ
१. २२७ खुजु स्तेयकरणे ।
१. २२८ ग्लुञ्चऽ
१. २२९ षस्ज षस्ज गतौ । षस्जिरात्मनेपद्यपि ।
१. २३० गुजऽ
१. २३१ गुजि अव्यक्ते शब्दे ।
१. २३२ अर्च पूजायाम् ।
१. २३३ म्लेछ अव्यक्ते शब्दे ।
१. २३४ लछऽ
१. २३५ लाछि लक्षणे ।

१. २३६ वाछि इच्छायाम् ।

१. २३७ आछि आयामे ।

१. २३८ ह्रीछ लज्जायाम् ।

१. २३९ हुर्छा कौटिल्ये ।

१. २४० मुर्छा मोहनसमुच्छ्राययोः ।

१. २४१ स्फुर्छा विस्तृतौ ।

१. २४२ युछ प्रमादे ।

१. २४३ उछि उञ्छे ।

१. २४४ उछी विवासे ।

१. २४५ ध्रजऽ

१. २४६ ध्रजिऽ

१. २४७ व्रजऽ

१. २४८ व्रजिऽ

१. २४९ धृजऽ

१. २५० धृजिऽ

१. २५१ ध्वजऽ

१. २५२ ध्वजि गतौ ।

१. २५३ ध्रिज च ।

१. २५४ कूजऽ

१. २५५ कुजि अव्यक्ते शब्दे ।

१. २५६ अर्जऽ

१. २५७ षर्ज अर्जने ।

१. २५८ गर्ज शब्दे ।

१. २५९ तर्ज भर्त्सने ।

१. २६० कर्ज व्यथने ।

१. २६१ खर्ज पूजने च ।

१. २६२ अज गतिक्षपनयोः ।

१. २६३ तेज पालने ।

१. २६४ खज मन्थे ।

१. २६५ कज मदे इत्येके ।

१. २६६ खजि गतिवैकल्ये ।

१. २६७ एजृ कम्पने ।

१. २६८ ट्वोस्फूर्जा वज्रनिर्घोषे ।

१. २६९ क्षि क्षये ।

१. २७० क्षीज अव्यक्ते शब्दे ।

१. २७१ लजऽ

१. २७२ लजि भर्जने ।

१. २७३ लाजऽ

१. २७४ लाजि भर्त्सने च ।

१. २७५ जजऽ

१. २७६ जजि युद्धे ।

१. २७७ तुज हिंसायाम् ।

१. २७८ तुजि पालने ।

१. २७९ गजऽ

१. २८० गजिऽ

१. २८१ गृजऽ

१. २८२ गृजिऽ

१. २८३ मुजऽ

१. २८४ मुजि शब्दार्थाः । गज मदने च ।

१. २८५ वजऽ

१. २८६ व्रज गतौ । इति शुचादयः क्षिवर्जमुदात्ता उदात्तेतः ।।

अथ टवर्गीयान्ताः ।

१. २८७ अट्ट अतिक्रमणहिंसनयोः अतिक्रमहिंसयोः ।

१. २८८ वेष्ट वेष्टने ।

१. २८९ चेष्ट चेष्टायाम् ।

१. २९० गोष्टऽ

१. २९१ लोष्ट सङ्घाते ।

१. २९२ घट्ट चलने ।

१. २९३ स्फुट विकसने ।

१. २९४ अठि गतौ ।

१. २९५ वठि एकचर्यायाम् ।

१. २९६ मठिऽ

१. २९७ कठि शोके ।

१. २९८ मुठि पालने ।

१. २९९ हेठ विबाधायाम् ।

१. ३०० एठ च ।

१. ३०१ हिडि गत्यनादरयोः ।

१. ३०२ हुडि सङ्घाते ।

१. ३०३ कुडि दाःए ।

१. ३०४ वडि विभाजने ।

१. ३०५ मडि च ।

१. ३०६ भडि परिभाषणे ।

१. ३०७ पिडि सङ्घाते ।

१. ३०८ मुडि मार्जने ।

१. ३०९ तुडि तोडने ।

१. ३१० हुडि वरणे । हरण इत्येके ।

१. ३११ स्फुडि विकसने ।

१. ३१२ चडि कोपे ।

१. ३१३ शडि रुजायां सङ्घाते च ।

१. ३१४ तडि ताडने ।

१. ३१५ पडि गतौ ।

१. ३१६ कडि मदे ।

१. ३१७ खडि मन्थे ।

१. ३१८ हेडृऽ

१. ३१९ होडृ अनादरे ।

१. ३२० बाडृ आप्लाव्ये ।

१. ३२१ \vADR^इ इत्येके ।

\१. ३२२ द्राडृऽ

१. ३२३ ध्राडृ विशरेणे ।

१. ३२४ शाडृ श्लाघायाम् । इत्यट्टादय उदात्ता अनुदात्तेतः ॥

१. ३२५ शौटृ गर्वे ।

१. ३२६ यौटृ बन्धे ।

१. ३२७ म्रेटृऽ

१. ३२८ म्रेडृ उन्मादे ।

१. ३२९ \mleTR^इ इत्येके ।

\१. ३३० कटे वर्षावरणयोः ।

१. ३३१ चटे इत्येके ।

१. ३३२ अटऽ

१. ३३३ पट गतौ ।

१. ३३४ रट परिभाषणे ।

१. ३३५ लट बाल्ये ।

१. ३३६ शट रुजाविशरणगत्यवसादनेषु ।

१. ३३७ वट वेष्टने ।

१. ३३८ किटऽ

१. ३३९ खिट त्रासे ।

१. ३४० शिटऽ

१. ३४१ षिट अनादरे ।

१. ३४२ जटऽ

१. ३४३ झट सङ्घाते ।

१. ३४४ भट भृतौ ।

१. ३४५ तट उच्छ्राये ।

१. ३४६ खट काङ्क्षायाम् ।

१. ३४७ णट नट नृतौ ।

१. ३४८ पिट शब्दसङ्घातयोः ।

१. ३४९ हट दीप्तौ च ।

१. ३५० षट अवयवे ।

१. ३५१ लुट विलोडने ।

१. ३५२ लुड इत्येके डान्तोऽयमित्येके ।

१. ३५३ चिट परप्रैष्ये परप्रेष्ये ।

१. ३५४ विट शब्दे ।

१. ३५५ बिट आक्रोशे ।

१. ३५६ हिट इत्येके ।

१. ३५७ इटऽ

१. ३५८ किटऽ

१. ३५९ कटी गतौ ।

१. ३६० हेठ विबाधायाम् ।

१. ३६१ मडि भूषायाम् ।

१. ३६२ कुडि वैकल्ये ।

१. ३६३ कुटि इत्येके ।

१. ३६४ मुडऽ

१. ३६५ पुड मर्दने प्रमर्दने ।

१. ३६६ मुटऽ

१. ३६७ पुट इत्येके ।

१. ३६८ चुडि अल्पीभावे ।

१. ३६९ मुडि खण्डने ।

१. ३७० पुडि चेत्येके ।

१. ३७१ रुटिऽ

१. ३७२ लुटि स्तेये ।

१. ३७३ रुठिऽ

१. ३७४ लुठि इत्येके ।

१. ३७५ रुडिऽ

१. ३७६ लुडि इत्यपरे ।

१. ३७७ वटि विभाजने ।

१. ३७८ \baTi इत्येके ।

\१. ३७९ स्फुटिर् विशरणे ।

१. ३८० स्फुटि इत्यपि केचित् ।

१. ३८१ पठ व्यक्तायां वाचि ।

१. ३८२ वठ स्थौल्ये ।

१. ३८३ \baTha इत्येके ।

\१. ३८४ मठ मदनिवासयोः ।

१. ३८५ कठ कृच्छ्रजीवने ।

१. ३८६ रठ परिभाषणे ।

१. ३८७ रट इत्येके ।।

१. ३८८ हठ प्लुतिशठत्वयोः । बलात्कार इत्यन्ये ।

१. ३८९ रुठऽ

१. ३९० लुठऽ

१. ३९१ ऊठ उपघाते ।

१. ३९२ उठ इत्येके ।

१. ३९३ पिठ हिंसासङ्क्लेशनयोः ।

१. ३९४ शठ कैतवे च ।

१. ३९५ शुठ गतिप्रतिघाते प्रतिघाते ।

१. ३९६ शुठि इत्येके ।

१. ३९७ कुठि च ।

१. ३९८ लुठि आलस्ये प्रतिघाते च ।

१. ३९९ शुठि शोषणे ।

१. ४०० रुठिऽ

१. ४०१ लुठि गतौ ।

१. ४०२ चुड्ड चुद्ड भावकरणे ।

१. ४०३ अड्ड अद्ड अभियोगे ।

१. ४०४ कड्ड कद्ड कार्कश्ये । चुड्डादयस्त्रयो दोपधाः ।

१. ४०५ क्रीडृ विहारे ।

१. ४०६ तुडृ तोडने ।

१. ४०७ तूडृ इत्येके ।

१. ४०८ हुडृऽ

१. ४०९ हूडृऽ

१. ४१० होडृ गतौ ।

१. ४११ रौडृ अनादरे ।

१. ४१२ रोडृऽ

१. ४१३ लोडृ उन्मादे ।

१. ४१४ अड उद्यमे ।

१. ४१५ लड विलासे ।

१. ४१६ लल इत्येके ईप्सायाम् ।

१. ४१७ कड मदे ।

१. ४१८ कडि इत्येके ।।

१. ४१९ गडि वदनैकदेशे । इति शौट्रादय उदात्ता उदात्तेतः ।।

अथ पवर्गीयान्ताः ।

१. ४२० तिपृऽ

१. ४२१ तेपृऽ

१. ४२२ ष्टिपृऽ

१. ४२३ ष्टेपृ क्षरणार्थाः । आद्योऽनुदात्तः । तेपृ कम्पने च ।

१. ४२४ ग्लेपृ दैन्ये ।

१. ४२५ टुवेपृ कम्पने ।

१. ४२६ केपृऽ

१. ४२७ गेपृऽ

१. ४२८ ग्लेपृ च ।

१. ४२९ मेपृऽ

१. ४३० रेपृऽ

१. ४३१ लेपृ गतौ ।

१. ४३२ हेपृऽ

१. ४३३ धेपृ च ।

१. ४३४ त्रपूष् लज्जायाम् ।

१. ४३५ कपि चलने ।

१. ४३६ रबिऽ

१. ४३७ लबिऽ

१. ४३८ अबि शब्दे ।

१. ४३९ लबि अवस्रंसने च ।

१. ४४० कबृ वर्णे ।

१. ४४१ क्लीबृ अधार्ष्ठ्ये ।

१. ४४२ क्षीबृ मदे ।

१. ४४३ \kShIvR^इ इत्येके ।

\१. ४४४ शीभृ कत्थने ।

१. ४४५ बीभृऽ

१. ४४६ चीभृ च ।

१. ४४७ रेभृ शब्दे ।

१. ४४८ अभिऽ

१. ४४९ रभि क्वचित्पठ्यते इत्येके ।

१. ४५० लभि च ।

१. ४५१ ष्टभिऽ

१. ४५२ स्कभि प्रतिबन्धे ।

१. ४५३ जभीऽ

१. ४५४ जृभि गात्रविनामे ।

१. ४५५ शल्भ कत्थने ।

१. ४५६ वल्भ भोजने ।

१. ४५७ गल्भ धार्ष्ट्ये ।

१. ४५८ श्रम्भु प्रमादे ।

१. ४५९ स्रम्भु इत्येके दन्त्यादिश्च ।

१. ४६० ष्टुभु स्तम्भे । इति तिपादयस्तिपिवर्जमुदात्ता अनुदात्तेतः ॥

१. ४६१ गुपू रक्षणे ।

१. ४६२ धूप सन्तापे ।

१. ४६३ जपऽ

१. ४६४ जल्प व्यक्तायां वाचि । जप मानसे च ।

१. ४६५ चप सान्त्वने ।

१. ४६६ षप समवाये ।

१. ४६७ रपऽ

१. ४६८ लप व्यक्तायां वाचि ।

१. ४६९ चुप मन्दायां गतौ ।

१. ४७० तुपऽ

१. ४७१ तुम्पऽ

१. ४७२ त्रुपऽ

१. ४७३ त्रुम्पऽ

१. ४७४ तुफऽ

१. ४७५ तुम्फऽ

१. ४७६ त्रुफऽ

१. ४७७ त्रुम्फ हिंसार्थाः ।

१. ४७८ पर्पऽ

१. ४७९ रफऽ

१. ४८० रफिऽ

१. ४८१ अर्बऽ

१. ४८२ पर्बऽ

१. ४८३ लर्बऽ

१. ४८४ बर्बऽ

१. ४८५ मर्बऽ

१. ४८६ कर्बऽ

१. ४८७ खर्बऽ

१. ४८८ गर्बऽ

१. ४८९ शर्बऽ

१. ४९० षर्बऽ

१. ४९१ चर्ब गतौ । चर्ब अदने च ।

१. ४९२ कुबि आच्छादने छादने ।

१. ४९३ लुबिऽ

१. ४९४ तुबि अर्दने ।

१. ४९५ चुबि वक्त्रसंयोगे ।

१. ४९६ षृभुऽ

१. ४९७ षृम्भु हिंसार्थौ ।

१. ४९८ षिभुऽ

१. ४९९ षिम्भु इत्येके ।

१. ५०० शुभऽ

१. ५०१ शुम्भ भाषने । भासन इत्येके । हिंसायामित्यन्ये । इति गुपादय उदात्ता उदात्तेतः ॥

अथानुनासिकान्ताः ।

१. ५०२ घिणिऽ

१. ५०३ घुणिऽ

१. ५०४ घृणि ग्रहणे ।

१. ५०५ घुणऽ

१. ५०६ घूर्ण भ्रमणे ।

१. ५०७ पण व्यवहारे स्तुतौ च ।

१. ५०८ पन च ।

१. ५०९ भाम क्रोधे ।

१. ५१० क्षमूष् सहने ।

१. ५११ कमु कान्तौ । इति घिण्यादय उदात्ता अनुदात्तेतः ॥

१. ५१२ अणऽ

१. ५१३ रणऽ

१. ५१४ वणऽ

१. ५१५ भणऽ

१. ५१६ मणऽ

१. ५१७ कणऽ

१. ५१८ क्वणऽ

१. ५१९ व्रणऽ ब्रणऽ

१. ५२० भ्रणऽ

१. ५२१ ध्वण शब्दार्थाः ।

१. ५२२ धण इत्यपि केचित् ।

१. ५२३ ओणृ अपनयने ।

१. ५२४ शोणृ वर्णगत्योः ।

१. ५२५ श्रोणृ सङ्घाते ।

१. ५२६ श्लोणृ च ।

१. ५२७ पैणृ गतिप्रेरणश्लेषणेषु ।

१. ५२८ प्रैणृ इत्यपि ।।

१. ५२९ ध्रणऽ शब्दे ।

१. ५३० बण इत्यपि केचित् ।

१. ५३१ कनी दीप्तिकान्तिगतिषु ।

१. ५३२ ष्टनऽ

१. ५३३ वन शब्दे ।

१. ५३४ वनऽ

१. ५३५ षन सम्भक्तौ ।

१. ५३६ अम गत्यादिषु गतौ शब्दे सम्भक्तौ च ।

१. ५३७ द्रमऽ

१. ५३८ हम्मऽ

१. ५३९ मीमृ गतौ । मीमृ शब्दे च ।

१. ५४० चमुऽ

१. ५४१ छमुऽ

१. ५४२ जमुऽ

१. ५४३ झमु अदने ।

१. ५४४ जिमु इति केचित् ।

१. ५४५ क्रमु पादविक्षेपे । इत्यणादय उदात्ता उदात्तेतः ।।

अथ यरलवान्ताः ।

१. ५४६ अयऽ

१. ५४७ वयऽ

१. ५४८ पयऽ

१. ५४९ मयऽ

१. ५५० चयऽ

१. ५५१ तयऽ

१. ५५२ णय गतौ । णय रक्षणे च ।

१. ५५३ दय दानगतिरक्षणहिंसादानेषु ।

१. ५५४ रय गतौ ।

१. ५५५ लय च ।

१. ५५६ ऊयी तन्तुसन्ताने ।

१. ५५७ पूयी विशरणे दुर्गन्धे च ।

१. ५५८ क्नूयी शब्द उन्दे च ।

१. ५५९ क्ष्मायी विधूनने ।

१. ५६० स्फायीऽ

१. ५६१ ओप्यायी वृद्धौ ।

१. ५६२ तायृ सन्तानपालनयोः ।

१. ५६३ शल चलनसंवरणयोः ।

१. ५६४ वलऽ

१. ५६५ वल्ल संवरणे सञ्चलने च ।

१. ५६६ मलऽ

१. ५६७ मल्ल धारणे ।

१. ५६८ भलऽ

१. ५६९ भल्ल परिभाषणहिंसादानेषु ।

१. ५७० कल शब्दसङ्ख्यानयोः ।

१. ५७१ कल्ल अव्यक्ते शब्दे । अशब्द इत्येके ।

१. ५७२ तेवृऽ

१. ५७३ देवृ देवने ।

१. ५७४ षेवृऽ

१. ५७५ गेवृऽ

१. ५७६ ग्लेवृऽ

१. ५७७ पेवृऽ

१. ५७८ मेवृऽ

१. ५७९ म्लेवृ सेवने ।

१. ५८० शेवृऽ

१. ५८१ खेवृऽ

१. ५८२ प्लेवृऽ

१. ५८३ केवृ इत्यप्येके ।

१. ५८४ रेवृ प्लवगतौ । इत्ययादय उदात्ता अनुदात्तेतः ।।

१. ५८५ मव्य बन्धने ।

१. ५८६ षूक्ष्यर्ऽ सूक्ष्यर्ऽ

१. ५८७ ईक्ष्यर्ऽ

१. ५८८ ईर्ष्य ईर्ष्यार्थाः ।

१. ५८९ हय गतौ ।

१. ५९० शुच्य अभिषवे ।

१. ५९१ चुच्य इत्येके ।

१. ५९२ हर्य गतिकान्त्योः ।

१. ५९३ अल अल भूषणपर्याप्तिवारणेषु । अयं स्वरितेदित्येके ।

१. ५९४ ञिफला विशरणे ।

१. ५९५ मीलऽ

१. ५९६ श्मीलऽ

१. ५९७ स्मीलऽ

१. ५९८ क्ष्मील निमेषणे ।

१. ५९९ पील प्रतिष्टम्भे ।

१. ६०० णील वर्णे ।

१. ६०१ शील समाधौ ।

१. ६०२ कील बन्धने ।

१. ६०३ कूल आवरणे ।

१. ६०४ शूल रुजायां सङ्घाते च ।

१. ६०५ तूल निष्कर्षे ।

१. ६०६ पूल सङ्घाते ।

१. ६०७ मूल प्रतिष्ठायाम् ।

१. ६०८ फल निष्पत्तौ ।

१. ६०९ चुल्ल भावकरणे ।

१. ६१० फुल्ल विकसने ।

१. ६११ चिल्ल शैथिल्ये भावकरणे च ।

१. ६१२ तिल गतौ ।

१. ६१३ तिल्ल इत्येके ।

१. ६१४ वेलृऽ

१. ६१५ चेलृऽ

१. ६१६ केलृऽ

१. ६१७ खेलृऽ

१. ६१८ क्ष्वेलृऽ

१. ६१९ वेल्ल चलने ।

१. ६२० \vehla इत्येके ।

\१. ६२१ पेलृऽ पल्लऽ

१. ६२२ फेलृऽ

१. ६२३ शेलृ गतौ ।

१. ६२४ षेलृ इत्येके ।

१. ६२५ स्खल सञ्चलने ।

१. ६२६ खल सञ्चये च ।

१. ६२७ गल अदने भक्षणे स्रावे च ।

१. ६२८ षल गतौ ।

१. ६२९ दल विशरणे ।

१. ६३० श्वलऽ

१. ६३१ श्वल्ल आशुगमने ।

१. ६३२ खोलृऽ

१. ६३३ खोरृ गतिप्रतिघाते ।

१. ६३४ धोरृ गतिचातुर्ये ।

१. ६३५ त्सर छद्मगतौ ।

१. ६३६ क्मर हूर्छने ।

१. ६३७ अभ्रऽ

१. ६३८ वभ्रऽ बभ्रऽ

१. ६३९ मभ्रऽ

१. ६४० चर गत्यर्थाः । चरतिर्भक्षणर्थोऽपि

चर भक्षणे च चरतिर्भक्षणेऽपि ।

१. ६४१ ष्ठिवु निरसने ।

१. ६४२ जि जये ।

१. ६४३ जीव प्राणधारणे ।

१. ६४४ पीवऽ

१. ६४५ मीवऽ

१. ६४६ तीवऽ

१. ६४७ णीव स्थौल्ये ।

१. ६४८ क्षिवुऽ

१. ६४९ क्षेवु निरसने ।

१. ६५० उर्वीऽ

१. ६५१ तुर्वीऽ

१. ६५२ थुर्वीऽ

१. ६५३ दुर्वीऽ

१. ६५४ धुर्वी हिंसार्थाः ।

१. ६५५ गुर्वी उद्यमने ।

१. ६५६ मुर्वी बन्धने ।

१. ६५७ पुर्वऽ पूर्वऽ

१. ६५८ पर्वऽ

१. ६५९ मर्व पूरणे ।

१. ६६० चर्व अदने ।

१. ६६१ भर्वऽ हिंसायाम् ।

१. ६६२ \bharba इत्येके ।

\१. ६६३ \bharbha इत्यन्ये ।

\१. ६६४ कर्वऽ

१. ६६५ खर्वऽ

१. ६६६ गर्व दर्पे ।

१. ६६७ अर्वऽ

१. ६६८ शर्वऽ

१. ६६९ षर्व हिंसायाम् ।

१. ६७० इवि व्याप्तौ ।

१. ६७१ पिविऽ

१. ६७२ मिविऽ

१. ६७३ णिवि सेचने । सेचने चेत्येके ।

१. ६७४ षिवि इत्येके । सेवन इति तरङ्गिण्याम् ।

१. ६७५ हिविऽ

१. ६७६ दिविऽ

१. ६७७ धिविऽ

१. ६७८ जिवि प्रीणनार्थाः ।

१. ६७९ रिविऽ

१. ६८० रविऽ

१. ६८१ धवि गत्यर्थाः ।

१. ६८२ कृवि हिंसाकरणयोश्च ।

१. ६८३ मव बन्धने ।

१. ६८४ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशऽश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ।

इति मव्यादयो जयतिवर्जमुदात्ता उदात्तेतः ॥

१. ६८५ धावु गतिशुद्ध्योः । उदात्तः स्वरितेत् ॥

अथोष्मान्ताः ।

१. ६८६ धुक्षऽ

१. ६८७ धिक्ष सन्दीपनक्लेशनजीवनेषु ।

१. ६८८ वृक्ष वरणे ।

१. ६८९ शिक्ष विद्योपादाने ।

१. ६९० भिक्ष भिक्षायामलाभे लाभे च ।

१. ६९१ क्लेश अव्यक्तायां वाचि । बाधन इत्यन्ये इति दुर्गः ।

१. ६९२ दक्ष वृद्धौ शीघ्रार्थे च ।

१. ६९३ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु ।
१. ६९४ ईक्ष दर्शने ।
१. ६९५ ईष गतिहिंसादर्शनेषु ।
१. ६९६ भाष व्यक्तायां वाचि ।
१. ६९७ वर्ष स्नेहने ।
१. ६९८ गेषृ अन्विच्छायाम् ।
१. ६९९ ग्लेषृ इत्येके ।
१. ७०० पेषृ प्रयत्ने ।
१. ७०१ एषृ इत्येके ।
१. ७०२ येषृ इत्यन्ये ।
१. ७०३ जेषृऽ
१. ७०४ णेषृऽ
१. ७०५ एषृऽ
१. ७०६ प्रेषृ गतौ ।
१. ७०७ रेषृऽ
१. ७०८ हेषृऽ
१. ७०९ ह्रेषृ अव्यक्ते शब्दे ।
१. ७१० कासृ शब्दकुत्सायाम् ।
१. ७११ भासृ दीप्तौ ।
१. ७१२ णासृऽ
१. ७१३ रासृ शब्दे ।

१. ७१४ णस कौटिल्ये ।

१. ७१५ भ्यस भये ।

१. ७१६ आङः शसि इच्छायाम् ।

१. ७१७ ग्रसुऽ

१. ७१८ ग्लसु अदने ।

१. ७१९ ईह चेष्टायाम् ।

१. ७२० बहिऽ

१. ७२१ महि वृद्धौ ।

१. ७२२ अहि गतौ ।

१. ७२३ गर्हऽ

१. ७२४ गल्ह कुत्सायाम् ।

१. ७२५ बर्हऽ

१. ७२६ बल्ह प्राधान्ये ।

१. ७२७ वर्हऽ

१. ७२८ वल्ह परिभाषणहिंसाच्छादनेषु ।

१. ७२९ प्लिह गतौ ।

१. ७३० वेहृऽ बेहृऽ

१. ७३१ जेहृऽ

१. ७३२ बाहृऽ वाहृ प्रयत्ने । जेहृ गतावपि ।

१. ७३३ द्राहृ निद्राक्षये । निक्षेप इत्येके ।

१. ७३४ काशृ दीप्तौ ।

१. ७३५ ऊह वितर्के ।

१. ७३६ गाहू विलोडने ।

१. ७३७ गृहू ग्रहणे ।

१. ७३८ ग्लह च अपादाने ।

१. ७३९ घुषि कान्तिकरणे ।

१. ७४० घष इति केचित् । इति धुक्षादय उदात्ता अनुदात्तेतः ॥

१. ७४१ घुषिर् अविशब्दने । शब्द इत्यन्ये पेठुः ।

१. ७४२ अक्षू व्याप्तौ ।

१. ७४३ तक्षूऽ

१. ७४४ त्वक्षू तनूकरणे ।

१. ७४५ उक्ष सेचने ।

१. ७४६ रक्ष पालने ।

१. ७४७ णिक्ष चुम्बने ।

१. ७४८ त्रक्षऽ

१. ७४९ ष्ट्रक्षऽ

१. ७५० तृक्षऽ

१. ७५१ ष्टृक्षऽ

१. ७५२ णक्ष गतौ ।

१. ७५३ वक्ष रोषे । सङ्घात इत्येके ।

१. ७५४ मृक्ष सङ्घाते ।

१. ७५५ म्रक्ष इत्येके ।

१. ७५६ तक्ष त्वचने ।

१. ७५७ पक्ष परिग्र्ःअ इत्येके ।

१. ७५८ सूर्क्ष आदरे ।

१. ७५९ षर्क्ष इति केचित् ।

१. ७६० काक्षिऽ

१. ७६१ वाक्षिऽ

१. ७६२ माक्षि काङ्क्षायाम् ।

१. ७६३ द्राक्षिऽ

१. ७६४ ध्राक्षिऽ

१. ७६५ ध्वाक्षि घोरवासिते च ।

१. ७६६ \dhmAkShi इत्येके ।

\१. ७६७ चूष पाने ।

१. ७६८ तूष तुष्टौ ।

१. ७६९ पूष वृद्धौ ।

१. ७७० मूष स्तेये ।

१. ७७१ लूषऽ

१. ७७२ रूष भूषायाम् ।

१. ७७३ शूष प्रसवे ।

१. ७७४ \sUSha इत्येके ।

\१. ७७५ यूष हिंसायाम् ।

१. ७७६ जूष च ।

१. ७७७ भूषऽ

१. ७७८ तसि अलङ्कारे ।

१. ७७९ ऊष रुजायाम् ।

१. ७८० ईष उञ्छे ।

१. ७८१ कषऽ

१. ७८२ खषऽ

१. ७८३ शिषऽ

१. ७८४ जषऽ

१. ७८५ झषऽ

१. ७८६ शषऽ

१. ७८७ वषऽ

१. ७८८ मषऽ

१. ७८९ रुषऽ

१. ७९० रिष हिंसार्थाः ।

१. ७९१ भष भर्त्सने ।

१. ७९२ उष दाःए ।

१. ७९३ जिषुऽ

१. ७९४ विषुऽ

१. ७९५ मिषुऽ

१. ७९६ णिषु सेचने ।

१. ७९७ पुष पुष्टौ ।

१. ७९८ श्रिषुऽ

१. ७९९ श्लिषुऽ

१. ८०० प्रुषुऽ

१. ८०१ प्लुषु दाःए ।

१. ८०२ पृषुऽ

१. ८०३ वृषुऽ

१. ८०४ मृषु सेचने । मृषु सहने च । इतरौ हिंसासङ्क्लेशनयोश्च ।

१. ८०५ घृषु सङ्घर्षे ।

१. ८०६ हृषु अलीके ।

१. ८०७ तुसऽ

१. ८०८ ह्रसऽ ह्लसऽ

१. ८०९ ह्लसऽ

१. ८१० रस शब्दे ।

१. ८११ लस श्लेषणक्रीडनयोः च ।

१. ८१२ घसॢ अदने ।

१. ८१३ जर्त्सऽ जर्जऽ जर्चऽ

१. ८१४ चर्चऽ

१. ८१५ झर्त्स झर्झ झर्ज परिभाषणहिंसातर्जनेषु ।

१. ८१६ पिसृऽ

१. ८१७ पेसृऽ
१. ८१८ विसऽ
१. ८१९ वेसऽ
१. ८२० बिसऽ
१. ८२१ बेस गतौ ।
१. ८२२ हसे हसने ।
१. ८२३ णिश समाधौ ।
१. ८२४ मिशऽ
१. ८२५ मश शब्दे ।
१. ८२६ शव गतौ ।
१. ८२७ शश प्लुतगतौ ।
१. ८२८ शसु हिंसायाम् ।
१. ८२९ शंसु स्तुतौ । दुर्गतावपीत्येके इति दुर्गः ।
१. ८३० चह परिकल्कने ।
१. ८३१ मह पूजायाम् ।
१. ८३२ रह त्यागे ।
१. ८३३ रहि गतौ ।
१. ८३४ दृहऽ
१. ८३५ दृहिऽ
१. ८३६ बृहऽ वृहऽ
१. ८३७ बृहि वृहि वृद्धौ । बृहि वृहि शब्दे च ।

बृहिर् वृहिर् इत्येके ।
१. ८३८ तुहिर्ऽ
१. ८३९ दुहिर्ऽ
१. ८४० उहिर् अर्दने ।
१. ८४१ अर्ह पूजायाम् । इति घुषिरादय उदात्ता उदात्तेतः ।।

अथ द्युतादयः ।
१. ८४२ द्युत दीप्तौ ।
१. ८४३ श्विता वर्णे ।
१. ८४४ ञिमिदा स्नेहने ।
१. ८४५ ञिष्विदा स्नेहनमोचनयोः गात्रप्रस्रवणे ।
स्नेहनमोहनयोरित्येके ।
१. ८४६ ञिक्ष्विदा चेत्येके ।
१. ८४७ रुच दीप्तावभिप्रीतौ च ।
१. ८४८ घुट परिवर्तने ।
१. ८४९ रुटऽ
१. ८५० लुटऽ
१. ८५१ लुठ
१. ८५२ उठ उपघाते प्रतिघाते ।
१. ८५३ शुभ दीप्तौ ।
१. ८५४ क्षुभ सञ्चलने ।

१. ८५५ णभऽ

१. ८५६ तुभ हिंसायाम् । आद्योऽभावेऽपि ।

१. ८५७ स्रंसुऽ श्रंसुऽ श्रंशुऽ

१. ८५८ ध्वंसुऽ

१. ८५९ भ्रंसु अवस्रंसने । ध्वंसु गतौ च ।

१. ८६० भ्रंशु इत्यपि केचित् तृतीय एव तालव्यान्त इत्यन्ये ।

१. ८६१ स्रम्भु विश्वासे ।

१. ८६२ वृतु वर्तने ।

१. ८६३ वृधु वृधौ ।

१. ८६४ शृधु शब्दकुत्सायाम् ।

१. ८६५ स्यन्दू प्रस्रवणे ।

१. ८६६ कृपू सामर्थ्ये । वृत् ।।इति द्युतादय उदात्ता अनुदात्तेतः ।।

अथ घटादयो मितः ।

१. ८६७ घटम् चेष्टायाम् ।

१. ८६८ व्यथम् भयसञ्चलनयोः ।

१. ८६९ प्रथम् प्रख्याने ।

१. ८७० प्रसम् विस्तारे ।

१. ८७१ म्रदम् मर्दने ।

१. ८७२ स्खदम् स्खदने ।
१. ८७३ क्षजिम् गतिदानयोः ।
१. ८७४ दक्षम् गतिहिंसनयोः गतिशासनयोः
वृद्धौ शीघ्रार्थे च ।
१. ८७५ कृपम् कृपायां गतौ च ।
१. ८७६ क्रपम् इत्येके ।
१. ८७७ कपम् इत्यन्ये ।
१. ८७८ कदिम्ऽ
१. ८७९ क्रदिम्ऽ
१. ८८० क्लदिम् वैक्लव्ये । वैकल्य इत्येके ।
१. ८८१ कदम्ऽ
१. ८८२ क्रदम्ऽ
१. ८८३ क्लदम् इत्यन्ये ।।
१. ८८४ ञित्वराम् सम्भ्रमे । घटादयो मितः । इति घटादय उदात्ता अनुदात्तेतः ।

१. ८८५ ज्वरम् रोगे ।
१. ८८६ गडम् सेचने ।
१. ८८७ हेडम् वेष्टने ।
१. ८८८ वटम्ऽ
१. ८८९ भटम् परिभाषणे ।

१. ८९० णटम् नृत्तौ । नतावित्येके । गतावित्यन्ये ।

१. ८९१ ष्टकम् प्रतिघाते प्रतीघाते ।

१. ८९२ चकम् तृप्तौ ।

१. ८९३ कखेम् हसने ।

१. ८९४ रगेम् शङ्कायाम् ।

१. ८९५ लगेम् सङ्गे ।

१. ८९६ ह्रगेम्ऽ

१. ८९७ ह्लगेम्ऽ

१. ८९८ षगेम्ऽ

१. ८९९ ष्ठगेम् संवरणे ।

१. ९०० कगेम् नोच्यते । क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये ।

१. ९०१ अकम्ऽ

१. ९०२ अगम् कुटिलायां गतौ ।

१. ९०३ कणम्ऽ

१. ९०४ रणम् गतौ ।

१. ९०५ चणम्ऽ

१. ९०६ शणम्ऽ

१. ९०७ श्रणम् दाने च । शणम् गतावित्यन्ये ।

१. ९०८ श्रथम्ऽ

१. ९०९ श्नथम्ऽ

१. ९१० श्लथम्ऽ

१. ९११ क्नथम्ऽ

१. ९१२ क्रथम्ऽ

१. ९१३ क्लथम् हिंसार्थाः ।

१. ९१४ चनम् च ।

१. ९१५ वनुम् च नोच्यते नोपलभ्यते ।

१. ९१६ ज्वलम् दीप्तौ ।

१. ९१७ ह्वलम्ऽ

१. ९१८ ह्मलम् सञ्चलने चलने ।

१. ९१९ स्मृम् आध्याने ।

१. ९२० दृईम् भये ।

१. ९२१ नृईम् नये ।

१. ९२२ श्राम् पाके ।

१. ९२३ ।।मारणतोषणनिशामनेषु ज्ञाम् ।
मारणतोषणनिशानेष्विति पाठान्तरम् ।।

१. ९२४ ।।कम्पने चलिः ।।

१. ९२५ ।।छदिर् ऊर्जने ।।

१. ९२६ ।।जिह्वोन्मथने लडिः ।।

१. ९२७ ।।मदीम् हर्षग्लेपनयोः ।।

१. ९२८ ।।ध्वनम् शब्दे ।।

१. ९२९ ।।दलिऽ

१. ९३० ||वलिऽ

१. ९३१ ||स्खलिऽ

१. ९३२ ||रणिऽ

१. ९३३ ||ध्वनिऽ

१. ९३४ ||त्रपिऽ

१. ९३५ ||क्षपयश्च इति भोजः ||

१. ९३६ ||स्वनम् अवतंसने | घटादयो मितः ||

१. ९३७ ||जनीऽ

१. ९३८ ||जॄईष्ऽ

१. ९३९ ||क्नसुऽ

१. ९४० ||रञ्जोऽमन्ताश्च ||

१. ९४१ ||ज्वलऽ

१. ९४२ ||ह्वलऽ

१. ९४३ ||ह्मलऽ

१. ९४४ ||नमामनुपसर्गाद्वा ||

१. ९४५ ||ग्लाऽ

१. ९४६ ||स्नाऽ

१. ९४७ ||वनुऽ

१. ९४८ ||वमां च ||

१. ९४९ ||न कमिऽ

१. ९५० ||अमिऽ

१. ९५१ ||चमाम् ||

१. ९५२ ||शमो दर्शने ||

१. ९५३ ||यमोऽपरिवेषणे ||

१. ९५४ ||स्खदिर् अवपरिभ्यां च ||

अथ फणादयः |

१. ९५५ फणम् गतौ गतिदीप्त्योः | वृत् |

इति घटादयः फणान्ता मितः | इति ज्वरादय उदात्ता उदात्तेतः परस्मैभाषाः ||

१. ९५६ राजृ दीप्तौ | उदात्तः स्वरितेत् ||

१. ९५७ टुभ्राजृऽ

१. ९५८ टुभ्राशृऽ

१. ९५९ टुभ्लाशृ दीप्तौ | इत्युदात्ता अनुदात्तेतः ||

१. ९६० स्यमुऽ

१. ९६१ स्वनऽ

१. ९६२ ध्वन शब्दे | फणादयो गताः |

१. ९६३ षमऽ

१. ९६४ ष्टम अवैकल्ये वैकल्ये | वृत् |

अथ ज्वलादयः |

१. ९६५ ज्वल दीप्तौ |

१. ९६६ चल कम्पने ।

१. ९६७ जल घातने ।

१. ९६८ टलऽ

१. ९६९ ट्वल वैकल्ये ।

१. ९७० ष्ठल स्थाने ।

१. ९७१ हल विलेखने ।

१. ९७२ णल गन्धे । बन्धन इत्येके ।

१. ९७३ पल गतौ ।

१. ९७४ बल प्राणने धान्यावरोधे च धान्यावरोधने च ।

१. ९७५ पुल महत्त्वे ।

१. ९७६ कुल संस्त्याने बन्धुषु च ।

१. ९७७ शलऽ

१. ९७८ हुलऽ

१. ९७९ पत्लृ गतौ ।

१. ९८० हुल हिंसासंवरणयोश्च हिंसायां संवरणे च ।

१. ९८१ क्वथे निष्पाके ।

१. ९८२ पथे गतौ ।

१. ९८३ मथे विलोडने ।

१. ९८४ टुवम उद्गिरणे ।

१. ९८५ भ्रमु चलने ।

१. ९८६ क्षर सञ्चलने ।

१. ९८७ क्षुर सञ्चये । इति स्यमादय उदात्ता उदात्तेतः ।।

१. ९८८ षह मर्षणे । उदात्तोऽनुदात्तेत् ।।

१. ९८९ रमु क्रीडायाम् । रम इति माधवः ।

अनुदात्तोऽनुदात्तेत् ।।

१. ९९० षद्लृ विशरणगत्यवसादनेषु ।

१. ९९१ शद्लृ शातने ।

१. ९९२ क्रुश आःवाने रोदने च । इति षदादयस्त्रयोऽनुदात्ता उदात्तेतः ।।

१. ९९३ कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ।

१. ९९४ बुध अवगमने ।

१. ९९५ रुःअ बीजजन्मनि प्रादुर्भावे च ।

१. ९९६ कस गतौ । इति कुचादय उदात्ता उदात्तेतो रुहिस्त्वनुदात्तः ।

वृत् । ज्वलादिर्गतः ।।

१. ९९७ हिक्क अव्यक्ते शब्दे ।

१. ९९८ अञ्चु गतौ याचने च ।

१. ९९९ अचु इत्येके ।

१. १००० अचि इत्येपरे ।

१. १००१ टुयाचृ याच्ञायाम् ।

१. १००२ रेटृ परिभाषणे ।

१. १००३ चतेऽ

१. १००४ चदे याचने च ।

१. १००५ प्रोथृ पर्याप्तौ ।

१. १००६ मिदृऽ

१. १००७ मेदृ मेधाहिंसनयोः ।

१. १००८ मिथृऽ

१. १००९ मेथृ इत्येके ।

१. १०१० मिधृ

१. १०११ मेधृ इत्यन्ये । मेधृ सङ्गमे च ।

१. १०१२ णिदृऽ

१. १०१३ णेदृ कुत्सासन्निकर्षयोः ।

१. १०१४ शृधुऽ

१. १०१५ मृधु उन्दने ।

१. १०१६ बुधिर् बोधने ।

१. १०१७ उबुन्दिर् निशामने ।

१. १०१८ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ।

१. १०१९ वेनृ इत्येके ।

१. १०२० खनु अवदारणे ।

१. १०२१ चीवृ आदानसंवरणयोः ।

१. १०२२ \chIbR^इ इत्येके ।

\१. १०२३ चायृ पूजानिशामनयोः ।
१. १०२४ व्यय गतौ ।
१. १०२५ दाशृ दाने ।
१. १०२६ भेषृ भये । गतावित्येके ।
१. १०२७ भ्रेषृऽ
१. १०२८ भ्लेषृ गतौ ।
१. १०२९ अस गतिदीप्त्यादानेषु ।
१. १०३० अष इत्येके ।
१. १०३१ अय गतौ ।
१. १०३२ स्पश बाधनस्पर्शनयोः ।
१. १०३३ लष कान्तौ ।
१. १०३४ चष भक्षणे ।
१. १०३५ छष हिंसायाम् ।
१. १०३६ झष आदानसंवरणयोः ।
१. १०३७ भ्रक्षऽ
१. १०३८ भ्लक्ष अदने ।
१. १०३९ भक्ष इति मैत्रेयः ।
१. १०४० प्लक्ष च ।
१. १०४१ दासृ दाने ।
१. १०४२ माहृ माने ।

१. १०४३ गुहू संवरणे । इति हिक्कादय उदात्ताः स्वरितेतः ॥

अथाजन्ताः ।

१. १०४४ श्रिञ् सेवायाम् । उदात्त उभयतोभाषः ॥

१. १०४५ भृञ् भरणे ।

१. १०४६ हृञ् हरणे ।

१. १०४७ धृञ् धारणे ।

१. १०४८ कृञ् करणे ।

१. १०४९ णीञ् प्रापणे । इति भृञादयोऽनुदात्ता उभयतोभाषाः ॥

१. १०५० धेट् पाने ।

१. १०५१ ग्लैऽ

१. १०५२ म्लै हर्षक्षये ।

१. १०५३ द्यै न्यक्करणे ।

१. १०५४ द्रै स्वप्ने ।

१. १०५५ ध्रै तृप्तौ ।

१. १०५६ ध्यै चिन्तायाम् ।

१. १०५७ रै शब्दे ।

१. १०५८ स्त्यैऽ

१. १०५९ ष्ट्यै शब्दसङ्घातयोः ।

१. १०६० खै खदने ।

१. १०६१ क्षैऽ

१. १०६२ जैऽ

१. १०६३ षै क्षये ।

१. १०६४ कैऽ

१. १०६५ गै शब्दे ।

१. १०६६ शैऽ

१. १०६७ श्रै पाके ।

१. १०६८ स्रै इति केषुचित्पाठः ।

१. १०६९ पैऽ

१. १०७० ओवै शोषणे ।

१. १०७१ ष्टैऽ

१. १०७२ ष्णै वेष्टने । शोभायां चेत्येके ।

१. १०७३ दैप् शोधने ।

१. १०७४ पा पाने ।

१. १०७५ घ्रा गन्धोपादाने घ्राणे ।

१. १०७६ ध्मा शब्दाग्निसंयोगयोः ।

१. १०७७ ष्ठा गतिनिवृत्तौ ।

१. १०७८ म्ना अभ्यासे ।

१. १०७९ दाण् दाने ।

१. १०८० ह्वृ कौटिल्ये ।

१. १०८१ स्वृ शब्दोपतापयोः ।

१. १०८२ स्मृ चिन्तायाम् ।

१. १०८३ द्वृ संवरणे वरणे ।

१. १०८४ ह्वृ इत्येके ।

१. १०८५ सृ गतौ ।

१. १०८६ ॠ गतिप्रापणयोः ।

१. १०८७ गृऽ

१. १०८८ घृ सेचने ।

१. १०८९ ध्वृ हूर्छने ।

१. १०९० स्रु गतौ ।

१. १०९१ षु प्रसवसैश्वर्ययोः ।

१. १०९२ श्रु श्रवणे ।

१. १०९३ ध्रु स्थैर्ये ।

१. १०९४ दुऽ

१. १०९५ द्रु गतौ ।

१. १०९६ जिऽ

१. १०९७ ज्रि अभिभवे ।

१. १०९८ जु इति सौत्रो धातुः गत्यर्थः । इति धयत्यादयोऽनुदात्ताः परस्मैभाषाः ।।

१. १०९९ ष्मिङ् ईषद्धसने ।

१. ११०० गुङ् अव्यक्ते शब्दे ।

१. ११०१ गाङ् गतौ ।

१. ११०२ उङ्ऽ

१. ११०३ कुङ्ऽ

१. ११०४ खुङ्ऽ

१. ११०५ गुङ्ऽ

१. ११०६ घुङ्ऽ

१. ११०७ ङुङ् शब्दे ।

१. ११०८ च्युङ्ऽ

१. ११०९ ज्युङ्ऽ

१. १११० जुङ्ऽ

१. ११११ प्रुङ्ऽ

१. १११२ प्लुङ् गतौ ।

१. १११३ क्लुङ् इत्येके ।

१. १११४ रुङ् गतिरोषणयोः ।

१. १११५ धृङ् अवध्वंसने ।

१. १११६ मेङ् प्रणिदाने ।

१. १११७ देङ् रक्षणे ।

१. १११८ श्यैङ् गतौ ।

१. १११९ प्यैङ् वृद्धौ ।

१. ११२० त्रैङ् पालने । इति ष्मिङ्प्रभृतयोऽनुदात्ता आत्मनेभाषाः ।।

१. ११२१ पूङ् पवने ।
१. ११२२ मूङ् बन्धने ।
१. ११२३ डीङ् विहायसा गतौ । इति पूङादयस्त्रय उदात्ता आत्मनेभाषाः ।।

१. ११२४ तॄई प्लवनतरणयोः । उदात्तः परस्मैभाषः ।।

अथ हलन्ताः ।

१. ११२५ गुप गोपने ।
१. ११२६ तिज निशाने ।
१. ११२७ मान पूजायाम् ।
१. ११२८ बध बन्धने । इति गुपादयश्चत्वार उदात्ता अनुदात्तेतः ।।

१. ११२९ रभ राभस्ये ।
१. ११३० डुलभष् प्राप्तौ ।
१. ११३१ ष्वञ्ज परिष्वङ्गे ।
१. ११३२ हद हद पुरीषोत्सर्गे । इति रभादयश्चत्वारोऽनुदात्ता अनुदात्तेतः ।।

१. ११३३ ञिक्ष्विदा अव्यक्ते शब्दे । उदात्त उदात्तेत् ॥
१. ११३४ स्कन्दिर् गतिशोषणयोः ।
१. ११३५ यभ मैथुने विपरीतमैथुने ।
१. ११३६ णम प्रह्वत्वे शब्दे च ।
१. ११३७ गम्लृऽ
१. ११३८ सृप्लृ गतौ ।
१. ११३९ यम उपरमे ।
१. ११४० तप सन्तापे ।
१. ११४१ त्यज हानौ ।
१. ११४२ षञ्ज सङ्गे ।
१. ११४३ दृशिर् प्रेक्षणे ।
१. ११४४ दंश दशने ।
१. ११४५ कृष विलेखने ।
१. ११४६ दःअ भस्मीकरणे ।
१. ११४७ मिःअ सेचने । इति स्कन्दादयोऽनुदात्ता उदात्तेतः ॥

१. ११४८ कित निवासे रोगापनयने च । उदात्त उदात्तेत् ॥

१. ११४९ दान खण्डने अवखण्डने ।
१. ११५० शान तेजने अवतेजने । इत्युदात्तौ स्वरितेतौ ॥

१. ११५१ डुपचष् पाके ।

१. ११५२ षच समवाये ।

१. ११५३ भज सेवायाम् ।

१. ११५४ रञ्ज रागे ।

१. ११५५ शप आक्रोशे ।

१. ११५६ त्विष दीप्तौ ।

अथ यजादयः ।

१. ११५७ यज देवपूजासङ्गतिकरणदानेषु ।

१. ११५८ डुवप टुवप बीजसन्ताने । छेदनेऽपि ।

१. ११५९ वःअ प्रापणे । इति पचादयोऽनुदात्ताः स्वरितेतः षचिस्तूदात्तः ॥

१. ११६० वस निवासे । उदात्तेदनुदात्तः ॥

१. ११६१ वेञ् तन्तुसन्ताने ।

१. ११६२ व्येञ् संवरणे ।

१. ११६३ ह्वेञ् स्पर्धायां शब्दे च । इति वेञादयस्त्रयोऽनुदात्ता उभयतोभाषाः ॥

१. ११६४ वद व्यक्तायां वाचि ।

१. ११६५ ट्वोश्वि गतिवृद्ध्योः । वृत् ।

यजादिः समाप्तः । अयं वदतिश्चोदात्तौ परस्मैभाषौ । चुलुम्पत्यादिश्च
भ्वादौ द्रष्टव्याः । तस्याकृतिगणत्वात् । ऋतिः सौत्रश्च
सजुगुप्साकृपयोः ॥वृत् ॥इति शब्विकरणा भ्वादयः
॥१॥

---

अथादादयः ।

२. १ अद भक्षणे ।
२. २ हन हिंसागत्योः । इत्यनुदात्तावुदात्तेतौ ॥

२. ३ द्विष अप्रीतौ ।
२. ४ दुःअ प्रपूरणे ।
२. ५ दिःअ उपचये ।
२. ६ लिःअ आस्वादने । इति द्विषादयोऽनुदात्ताः स्वरितेतः ॥

२. ७ चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । अनुदात्तोऽनुदात्तेत् ॥

२. ८ ईर गतौ कम्पने च ।
२. ९ ईड स्तुतौ ।

२. १० ईश ऐश्वर्ये ।

२. ११ आस उपवेशने ।

२. १२ आङः शासु इच्छायाम् ।

२. १३ वस आच्छादने ।

२. १४ कसि गतिशासनयोः ।

२. १५ कस इत्येके ।

२. १६ कश इत्यन्ये इत्यपि ।

२. १७ णिसि चुम्बने ।

२. १८ णिजि शुद्धौ ।

२. १९ शिजि अव्यक्ते शब्दे ।

२. २० पिजि वर्णे । सम्पर्चन इत्येके । उभयन्नेत्यन्ये । अवयव इत्यपरे । अव्यक्ते शब्द इतीतरे ।

२. २१ पृजि इत्येके ।

२. २२ वृजी वर्जने ।

२. २३ वृजि इत्येके ।

२. २४ पृची सम्पर्चने सम्पर्के । इतीरादय उदात्ता अनुदात्तेतः ।।

२. २५ षूङ् प्राणिगर्भविमोचने ।

२. २६ शीङ् स्वप्ने । इत्युदात्तावात्मनेभाषौ ।।

२. २७ यु मिश्रेणेऽभिश्रणे च ।

२. २८ रु शब्दे ।

२. २९ तु तु गतिवृद्धिहिंसासु वृद्ध्यर्थः । इति सौत्रो धातुः ।

२. ३० णु स्तुतौ ।

२. ३१ टुक्षु शब्दे ।

२. ३२ क्ष्णु तेजने ।

२. ३३ ष्णु प्रस्नवणे । इति युप्रभृतय उदात्ताः परस्मैभाषाः ॥

२. ३४ ऊर्णुञ् आच्छादने । उदात्त उभयतोभाषः ॥

२. ३५ द्यु अभिगमने ।

२. ३६ षु प्रसवैश्वर्ययोः ।

२. ३७ कु शब्दे ।

२. ३८ ष्टुञ् स्तुतौ । इति द्युप्रभृतयोऽनुदात्ताः परस्मैभाषाः । स्तौतिस्तूभयतोभाषः ॥

२. ३९ ब्रूञ् ब्रूञ् व्यक्तायां वाचि । उदात्त उभयतोभाषः ॥

२. ४० इण् गतौ ।

२. ४१ इङ् अध्ययने । नित्यमधिपूर्वः ।

२. ४२ इक् स्मरणे । अयमप्यधिपूर्वः ।

२. ४३ वी गतिप्रजनकान्त्यसनखादनेषु ।

